प्रयच्छतु=वितरत्विति प्रार्थये । यो ह्यनन्तकरुणापूर्णोऽनन्तजिच्च, तत एवाऽनन्तसुखलाभसम्भवः, यदुक्तम्—"पूर्णात्पूर्णमुदच्यते" इति भाव । उपमानादुपमेयस्याऽऽधिक्यवर्णनाद्व्यतिरेकाऽलङ्कार. ॥ १६ ॥

अथ पञ्चदश धर्मनाथजिन स्तुवन्नाह —

**कल्पद्रुमसधर्माणमिष्टप्राप्तौ शरीरिणाम् ।**
**चतुर्धा धर्मदेष्टार धर्मनाथमुपास्महे ॥ १७ ॥**

कल्पद्रुमेति । **शरीरिणाम्**=प्राणिनाम्, "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिण" इत्यमर । **इष्टप्राप्तौ**=इष्टस्याऽभिलषितार्थस्य प्राप्तौ लाभे, **कल्पद्रुमसधर्माणम्**=कल्पद्रुमस्य, समानो धर्मो यस्य सधर्मा सदृशस्त तादृशम्, कल्पवृक्षवदिष्टप्रदमिति मिलितार्थ । तत्र हेतुगर्भ विशेषणमाह — **चतुर्धाधर्मदेष्टारम्**=चतुर्धा दानशीलतपोभावभेदाच्चतुर्विधो यो धर्म उपलक्षणत्वात्तत्सञ्चयहेतुरनुष्ठानादि', कारणे कार्योपचाराद्दानक्रियादिरपि धर्म । त दिशत्युपदिशतीति स तादृशस्तम् । चतुर्धाधर्माऽऽराधनेन प्राणिना सकलेष्टसिद्धि, इष्टो हि धर्म एव तेषाम् । तल्लाभे चैष एव कल्पतरु, अन्यत्र प्रयस्याऽपि स दुरापश्चेति भाव । विशेष्यमाह — **धर्मनाथम्**=तदाख्य पञ्चदश तीर्थङ्करम्, अस्मिन् गर्भस्थे मातुर्धर्मक्रियादोहदभावात्तदनुसारेण पितृभ्या धर्मनाथेति कृताऽभिख्यम्, चतुर्धा धर्मदेशकत्वाद्धर्मस्य नाथ इत्येवमन्वर्थाऽभिधम्, **उपास्महे**=भजामहे । धर्माऽभीप्सुना धर्मदेष्टा धर्मनाथ एव शरणमिति भाव ॥ १७ ॥

अथ षोडशं शान्तिजिनं स्तुवन्नाह—

सुधासोदरवाग्ज्योत्स्नानिर्मलीकृतदिङ्मुखः ।
मृगलक्ष्मा तमःशान्त्यै शान्तिनाथजिनोऽस्तु वः ॥१८॥

सुधेत्यादि । सुधासोदरवाग्ज्योत्स्नानिर्मलीकृतदिङ्मुखः= सुधाऽमृतं तस्यास्तुल्यत्वान्मुक्तिमार्गादिप्रतिपादनेन कृत्वाऽमरत्व- प्रदत्वाद्दुर्लभत्वाच्च सोदरा सदृशी या वाग् देशनावाण्येव सुधासम्बन्धेन निर्मलीकरणात्मना च ज्योत्स्ना चन्द्रिका, "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः । तया कृत्वा निर्मलीकृतानि कर्मक्षयोपशम- प्रदर्शनेन कृत्वा कर्ममलरहितानि तमोऽपगमात्प्रकाशयुक्तत्वाच्च प्रसन्नानि कृतानि दिशां ककुभां मुखानि मुखवत्पुरः स्थितत्वात्पुरोभागा तात्स्थ्यात्तद्व्यपदेशाद्दिगन्तवासजनाः प्राणिनश्च येन स तादृशः । "दिशस्तु ककुभः काष्ठा' इत्यमरः । ज्योत्स्नाभिर्हि दिशो निर्मली- करणमुचितमेव । यथा ज्योत्स्नाभिर्दिगन्तपर्यन्ते प्रकाश्यते तथा वाचा सर्वे ज्ञानात्मना प्रकाश्यन्ते । प्रकाशेनेव ज्ञानेन तमसोऽज्ञानस्य समुन्मूलनादिति तात्पर्यम् । एतेन तमःशान्तिसामर्थ्यं साकल्यमुक्तम् । अत एव चन्द्रज्योत्स्नासाधर्म्यात् मृगलक्ष्मा=मृगो हरिण एव लक्ष्म लाञ्छनं यस्य स तादृशो हरिणलाञ्छनश्चन्द्ररूपश्च । शान्ति- जिनस्य मृगो लाञ्छनमिति प्रसिद्धमेव । हिमांशुश्चन्द्रमाश्चन्द्र ... इन्दुर्मृगाङ्कः कलानिधिरि ति "कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्" इति चामरः । विशेष्यमाह—शान्तिनाथजिनः=शान्ति- रित्याख्यः षोडशतीर्थङ्कर अस्मिन् गर्भस्थे लोके सर्वोपद्रवशान्ति

जातेति पितृभ्यां तदनुसारेण शान्तिरिति कृताऽभिख्य शम्यादित्या-शास्यमानः, स एव सन्मार्गोपदेशादिना पालकत्वान्नाथ इव नाथ. स्वामी, स चाऽसौ जयति रागादीनिति जिनः, स तादृश । वः=युष्माकम्, तमःशान्त्यै=तमसोऽन्धकारस्य वस्तुयाथात्म्याऽवबोधप्रतिपन्थित्वसा-धर्म्यादुपचारादज्ञानस्य च शान्त्या उपशमाय, तमोनाशायेत्यर्थः। प्रबोध-प्रकाशायेति यावत् । अस्तु=भवत्विति प्रार्थये । यो हि शान्तिनाथ-स्तत एव तम शान्तिप्रार्थनमनुगुणम् । ज्योत्स्नाद्योतितदिङ्मुखश्च मृगलक्ष्मा तम शान्त्यै भवत्येवेति शान्तनाथस्तुतिरवश्यफलप्रदेति ध्वन्यते । परम्परितरूपकाऽलङ्कारस्तस्य चोपमाऽङ्गम् ॥ १८ ॥

अथ सप्तदश कुन्थुजिनं स्तुवन्नाह—

**श्रीकुन्थुनाथो भगवान् सनाथोऽतिशयर्द्धिभि ।**
**सुरासुरनृनाथानामेकनाथोऽस्तु व श्रिये ॥ १९ ॥**

श्रीकुन्थुनाथ इति । सुरासुरनृनाथानाम्=सुराश्चाऽसुराश्च नरश्च तथा तेषामेव नाथाश्च, यद्यपि सुरादिनाथा अपि सुरादय एवेति पृथङ्नाथोक्तिर्गतार्था, तथापि ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिर्बोध्या । सुरनाथादिनाथश्च अगन्नाथ एवेति तिर्यगाद्यनुक्तेर्न न्यूनता । सुरादीन् विहाय तन्नाथानामेव तात्पर्यविषयत्वे च न्यूनता समापद्यत एव, नहि सुरादिनाथनाथ एव कोऽपि न ▪ सुरादिनाथ इति युक्तिमत् । यद्वा य सुरादिनाथनाथ स सुरादिनाथ सुतरामिति यथेष्ट व्याख्येय न काऽपि निर्बन्ध । तेषा देवदानवमानवेन्द्राणाम् । एकनाथः=एको द्वितीयस्य तादृशस्याऽभावादेकमात्र स्वयमनाथत्वाच्च प्रधानं च नाथ-

धीसमृद्धत्वाविना स्वामीव स तावद सर्वथानाथ इति निष्कर्ष । तत्र हेतुगर्भं विशेषणमाह—अतिशयर्द्धिभिः=अतिशेते लोकानेभि-रित्यतिशया अलौकिकाऽनितरसाधारणगुणा प्रसिद्धा छद्मस्थतिरस्य, तस्य ऋद्धयोऽतिशयवस्त्वम् । यदुक्तम्—'स्वामिन् ! सहस्रजिह्वोऽपि शक्तो वक्तुं न ते गुणानि'ति । अतिशया एव ऋद्धय सम्पत् इति वा ताभि कृत्वा सनाथः=समन्वित लोकेऽपि हि सुरादिनाथो-ऽन्यापेक्षया अतिशयाऽतिशयसम्पन्नो भवति अयं स्वातिशयर्द्धिभिः सनाथ इति सुरासुरनृनाथसामेकनाथो भगवानेवेति भावः । अत एव भगवान्=भग ऐश्वर्यादिस्तद्वान्, भगशब्दश्चैश्वर्यादिसमग्र इत्यर्थः । "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणे 'त्युक्तरिति बोध्यम् । विशेष्यमाह—श्रीकुन्थुनाथः=श्रीसमन्वितः कुन्थुनाथेत्याख्य सप्तदशतीर्थङ्कर, यस्मिन् गर्भस्थे सति माता कुन्थुनामरत्नराशिदर्शनात्तदनुसारेण पितृभ्यां कुन्थुनाथेति कृतोऽभिख्य वः=युष्माकम्, श्रिये=ज्ञानादिसम्पदे अस्तु=भवत्विति प्रार्थये । यः सर्वश्रीसम्पन्न स एव श्रिये भवितु मर्हतीति भाव ॥ १९ ॥

अथाऽष्टादशमरनाथजिनं स्तुवन्नाह—

अरनाथ स भगवांश्चतुर्थाऽरनभोरविः ।
चतुर्थपुरुषार्थश्रीविलासं वितनोतु वः ॥ २० ॥

अरनाथ इति । सः=जगति चतुर्थपुरुषार्थप्रदत्वेन प्रख्यात, चतुर्थाऽरनभोरविः=चतुर्थो ह्यवसर्पिणे कालचक्रे तुरीयो योऽरस्तत्-

स्याऽर इव भाग इत्यर इति स्यातश्चतुर्थोऽशो दु षमसुषमाऽरः, स एवाररविणाऽधिष्ठीयमानत्वाज्ज्ञानादिप्रभया प्रकाश्यमानत्वाच्च नभो गगनम्, "नभोऽन्तरीक्षं गगनमि"त्यमर.। तस्य तत्प्रकाशकत्वात्त-दधिष्ठानत्वाच्च तत्सम्बन्धी रवि प्रकाशकत्वादिसाधर्म्याद्रविरूप·। सूर्यो यथा गगने सर्वताराग्रहाद्युत्कृष्ट सर्वलोकप्रकाशकश्च, तथाऽर-नाथोऽपि चतुर्थारे सर्वोत्कृष्ट सर्वप्राणिप्रबोधोद्बोधकश्चेति भाव.। कुत इत्याकाङ्क्षानिवृत्तये आह—भगवान्=ऐश्वर्यादिरूपभगसम्पन्न, यो हि भगवान् स लोकोत्तमो भवत्येवेति हृदयम्। अत एव, सः=सर्व-जगत्ख्यात, विशेष्यमाह—अरनाथः=तदाख्योऽष्टादशस्तीर्थङ्कर·, अस्मिन् गर्भस्थे मात्रा स्वप्ने चक्रारदर्शनादितिकृत्या तदनुसारेणाऽर इति कृताऽभिख्यः, वः=युष्माकम्, चतुर्थपुरुषार्थश्रीविलासम्=चतुर्थो य. पुरुषस्याऽर्थ. प्रयोजनं धर्माऽर्थकाममोक्षेष्वन्त्यो मोक्षनामा पुरुषार्थस्तस्य या श्री शाश्वताऽखण्डानन्दादिलक्ष्मी., अथवा तद्रूपा या श्रीस्तस्या विलास प्राकट्येन सान्निध्यम्, तम्, वितनोतु=उपदेशादिना सज्ज्ञानप्रदानेन कृत्वा सम्पादयतु। चतुर्थस्तस्य चतुर्थप्रदत्वमनुगुणमेव। किं च स एव चतुर्थपुरुषार्थप्रद, यदुक्तम्—"जगन्ति भिन्दन्तु सृजन्तु वा पुनर्यथा तथा वा पतय प्रवादिनाम्। त्वदेकनिष्ठे भगवन्! भवक्षयक्षेमोपदेशे तु पर तपस्विन·" इति भाव.। परम्परितरूपका-ऽलङ्कार.॥ २०॥

अथैकोनविंश मल्लिजिनं स्तुवन्नाह—

**सुरासुरनराधीशमयूरनववारिदम्।**
**कर्मद्रून्मूलने हस्तिमल्लं मल्लिमभिष्टुम ॥ २१ ॥**

सुरासुरेति—सुरासुरनराधीशमयूरनववारिदम्=सुराश्चासुराश्च नराश्च तेषामेवाऽधीशाः इन्द्राश्च सुरासुरनराधीशा एव मयूरा बर्हिणः, " मयूरो बर्हिणो बर्ही शुक्लापाङ्गः शिखावल " इत्यमरः । तेषां नवोऽपूर्वः, इतरजनदुर्लभत्वादिनिमित्तः । स चासौ ज्ञानादिरूपामि मधुरतरसलिलसम्भृतत्वात्सम्यगव वारिदो मेघस्तद्रूप इत्यर्थः । मयूरो हि मधुरं सलिलसम्भृतमुन्नतं वारिदं दृष्ट्वा हृष्यति केकारवं करोति नृत्यति च । सुरादयश्चाऽपि भवद्भिर्वं दृष्ट्वा हृष्यन्ति जयजयारवं कुर्वन्ति नृत्यादि च कुर्वन्ति । एतस्य हि वारिदरियमिति सुष्ठूक्तं मयूरनववारिदमिति । सुरादिमयूरनववारिदत्वे हेतुगर्भं विशेषणमाह——कर्मद्रुमोन्मूलने =कर्माण्येव दृढद्रुमास्तेषां ज्ञानावरणादिनानाशाखाप्रशाखत्वाद्दुर्भेद्यऽनिष्टफलत्वाच्च द्रुमो द्रुमास्तेषां ज्ञानचारित्रादिना स्वकीयानां परकीयानां च सन्मार्गोपदेशादिनोन्मूलने मूलतस्तूत्पाटने विषये, विनाशन इत्यर्थः । हस्तिमल्लम्=ऐरावतनाम्नं गजेन्द्रम् तद्रूपमित्यर्थः । गजेन्द्रस्य हि द्रुमोत्पाटन प्रसिद्धमेव । एतेन कर्मनाशने तस्य सामर्थ्यमिति व्यज्यते । बलातिशयादि गजेन्द्रोऽनतिप्रयासेनैव द्रुममुन्मूलयतीति बोध्यम् । यदुक्तम् " त्यागो भाऽन्यः कर्मकक्षमुन्मूलयति मूलतः " इति । ‘ ऐरावतो हस्तिमल्लः अभ्रमातङ्गोऽभ्रमुप्रिय ’ इति हैम । कर्मव्यथितानां हि तापकुलानां मयूराणां तापनाशको वारिद इव कर्मद्रुमोन्मूलने मल्लिरिति द्रष्टव्यम् । अत्र वारिदरूपस्य द्रुमपोषकत्वाऽनुपपत्तिरस्य द्रुमोन्मूलकहस्तिमल्लतया रूपणमसम्भवमिव प्रतिभातीति समाधानीयम् । विशेष्यमाह—मल्लिम्=एकोनविंशतीर्थकरम्, यस्मिन् गर्भस्थे मातुः पुष्पमाल्यशयनदोहदाप्तस्तदनुसारेण पितृभ्यां मल्लिरिति कृताभिधानम्,

अभिष्टुम = गुणकीर्तनेन कृत्वा तदाभिमुख्यं साधयामः । आनन्द-लाभार्थं कर्मोन्मूलनार्थं चेति तादृशविशेषणमहिम्ना प्रतीयते ॥ २१ ॥

अथ विंशतितम मुनिसुव्रतजिन स्तुवन्नाह—

**जगन्महामोहनिद्राप्रत्यूषसमयोपमम् ।**
**मुनिसुव्रतनाथस्य देशनावचनं स्तुम ॥ २२ ॥**

जगदिति । **जगन्महामोहनिद्राप्रत्यूषसमयोपमम्** = जगत-स्वास्थ्याच्छन्दयाज्जगज्जन्तूना यो महाननादिकालप्रवृत्तत्वादुत्कट-त्वाच्च दीर्घो गाढश्च यो मोहोऽनात्मनि ममत्वबुद्धि, यदुक्तम् "अनित्य-धनदेहादौ नित्यत्वेन ममेति च । अज्ञानेनाऽऽवृता बुद्धिर्मोह इत्यभि-धीयते" इति । स एव सत सज्ज्ञानस्याऽन्तरायत्वाच्चदागमप्रतिपन्थि-त्वाच्च निद्रा शयनमिव, "स्यान्निद्रा शयन स्वाप" इत्यमर । तस्या निवर्तन-साधनलक्षणेन सम्बन्धेन तत्सम्बन्धी यत्प्रत्यूषोऽहर्मुखम्, "उषसि प्रबुद्धयेते" सुक्तेरिति भाव. । "प्रत्यूषोऽहर्मुखं कल्यमि" त्यमरः । तेदात्मक समय काल, दिवसस्य पञ्चपञ्चाशत्तमघटिका । यदुक्तम् "पञ्च पञ्च उष काल. सप्त पञ्चाऽरुणोदय । अष्टपञ्च भवेत्प्रात.शेष. सूर्योदय स्मृत " इति । स निवर्तकत्वसाधर्म्यादुपमा यस्य तत्तादृशम् । यथा प्रत्यूषकालेन निद्राविलयो ज्ञानागमश्च, तथा मुनिसुव्रतवचनेन मोहव्यपोह सज्ज्ञानलाभश्चेत्यर्थ । **मुनिसुव्रतनाथस्य**=मुनिसुव्रतस्त-दाख्यश्चाऽसौ मोहनाशार्थमाशास्यमानत्वान्नाथश्च तस्य तदाख्यस्य विंशतितमतीर्थङ्करस्य, अस्मिन् गर्भस्थे मातुर्मुनेरिव सुव्रतभावात्तदनु-सारेण पितृभ्यां मुनिसुव्रतेति कृताऽभिख्यस्य, तदुचरितत्वेन तत्सम्बन्धी-

क्रियासाम्यात्सकण्ठरवोक्तनिमिलीकारक्रियासाम्याश्चाऽत्रोपमाऽलङ्कारः । अत्रोत्प्रेक्षा वर्णयन्तास्तत्त्वलङ्कारमर्मणा दत्ताऽर्धचन्द्रा एव । उपमानोपमेयोभयसाधारणक्रियायाः स्वयमेवोक्तेः । प्रकृतस्य परात्मना सम्भावनमुत्प्रेक्षा, न तु सामान्यधर्मोक्तिपुरस्सरं साम्यप्रतिपादनम् । उत्प्रेक्षायामपि साम्यं मूलमित्यन्यदेतत् । यथा हि मूर्ध्नि लुठद्भिर्वारिपूरैः स्नानादौ शरीरस्य मलाऽपकर्षणेन कृत्वा निर्मलता, तथा मूर्ध्नि लुठद्भिः पादनखांशुभिस्तेषां पुण्यत्वात्कर्ममलाऽपकर्षणेन आत्मनः शुचितेति तत्त्वम् ॥२३॥

अथ द्वाविंशमरिष्टनेमिजिनं स्तुवन्नाह—

यदुवंशसमुद्रेन्दुः कर्मकक्षहुताशनः ।
अरिष्टनेमिर्भगवान् भूयाद्वोऽरिष्टनाशनः ॥ २४ ॥

यदुवंशेति । यदुवंशसमुद्रेन्दुः=यदूनां यदुनामनृपाऽपत्यानां यो वंशः सन्तानः, "वंशोऽन्ववायः सन्तानः" इत्यमरः । स एवाऽतिमहत्त्वात्तथ्यातिसलिलराशिपूर्णत्वादसङ्ख्यातपुरुषरत्नादिसम्भृतोदरत्वाच्च समुद्र इव, तस्य तद्वर्धकत्वात्तद्भवत्वाच्च तत्सम्बन्धीन्दुश्चन्द्र इव, चन्द्रः समुद्रोद्भवः समुद्रवर्धकश्च प्रसिद्धः, तद्वदयमपि । यदुवंशवर्धको यदुवंशोद्भवश्चेत्युपमा । तथा, कर्मकक्षहुताशनः=कर्माणि शुभाऽशुभानि कक्षा वनानि, "कान्तारं विपिनं कक्षं स्यात्षण्डं काननं वनमि"ति हैमः । तस्य तद्दाहकत्वात्तत्सम्बन्धी हुताशनो वह्निरिव, स तादृशः । हुताशनो वनमिवाऽयं कर्माणि स्वीयानि चारित्रादिना परकीयाणि च तथाविधोपदेशादिना नाशयतीति भावः । ननु स क इत्यपेक्षायामाह—भगवान्=ऐश्वर्यादिरूपप्रशस्तभूमभगसम्पन्नः,

=जिनभक्ते तदाख्ये नागराजविशेषे, चः समुच्चये, तेन स्वोचितं कर्म कुर्वतीत्यस्योमयत्राऽन्वयः । तुल्यमनोवृत्ति=तुल्या मध्यस्थतयाऽपकारिणि द्वेषरहितोपकारिणि च रागरहिता च मनोवृत्तिर्भावोऽभिप्रायो यस्य स तादृशः, समतामतिरित्यर्थः । वीतराग इति यावत् । इदमसाधारणमलौकिकं च वैशिष्ट्यं यदपकारिणि न द्वेष उपकारिणि च न राग इति भावः । विशेष्यमाह — पार्श्वनाथः=तदाख्यस्त्रयोविंशतीर्थङ्करः, अस्मिन् गर्भस्थे तमस्विन्यामपि रात्रौ मात्रा पार्श्वतो गच्छतः सर्पस्याऽवलोकनात्मिस्मृत्या तदनुसारेण पार्श्वं इति कृताऽभिख्य, प्रभुः=स्वामी, एतेन तस्य समता नाऽशक्तस्येति मनोरथसिद्धिसम्भावना च सूच्यते। वः=युष्माकम्, श्रियै=लक्ष्म्यै, अस्तु=भवतु । यो हि वीतरागस्तत एव चिन्तामणिवत्प्रार्थनासिद्धिरिति तात्पर्यम्। पार्श्वनाथप्रभौ प्रतिमामास्थिते तद्ध्यानभङ्गाय पूर्वजन्मवैरिणा कमठदानवेनोपसर्गः कृत । प्रभोः परमोपासकेन नागराजेन धरणेन्द्रेण च स निवारित इति कथामनुसन्धायैषा स्तुतिरिति बोध्यम् ॥ २५ ॥

अथ चरमजिन श्रीमहावीरस्वामिनं स्तुवन्नाह—

**कृताऽपराधेऽपि जने कृपामन्थरतारयोः ।**
**ईषद्बाष्पार्द्रयोर्भद्रं श्रीवीरजिननेत्रयोः ॥ २६ ॥**

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितं सकलाऽर्हत्स्तोत्रं समाप्तम् ॥

कृतेति । कृताऽपराधे=कृतो विहितोऽपराधो मन्तुर्विविधोपसर्गरूपो येन स तादृशस्तस्मिन्, अनिष्टाऽऽचरणेनाऽपराधिनि, अपि-

श्रमःस्खलित इव जातः स सुरः स्वस्थानं गन्तुमुपक्रान्तो "हन्त! कथमस्य सुगतिर्भवित्री"ति तच्चिन्तया कृपया निश्चलाभ्यामश्रुस्निग्धाभ्यां भगवता ददृशे। तत्स्थितिमनुसन्धाय स्तुतिरेषा जिनस्य निष्कारण-कारुणिकत्वसूचनाय प्रवृत्ता। एतेन स्वस्मिन्नपि प्रभोस्तादृशदृष्टिप्रार्थनं ध्वन्यते ॥ २६ ॥

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचिते सकलाऽर्हत्स्तोत्रे श्रीतपोगच्छाऽधिपतिशासनसम्राट्कदम्बगिरिप्रभृत्यनेकतीर्थोद्धारकाऽऽचार्यवर्यश्रीविजयनेमिसूरीश्वरपट्टालङ्कारसमयज्ञशान्तमूर्त्याचार्यवर्यश्रीविजय-विज्ञानसूरीश्वरपट्टधरसिद्धान्तमहोदधिप्राकृतविद्विशारदाचार्यवर्यश्रीविजय-कस्तूरसूरीश्वरशिष्यपन्यासश्रीकीर्तिचन्द्रविजयगणिविरचिता कीर्तिकला-ख्या व्याख्या समाप्ता ॥

## ॥ श्रीवीरजिनस्तोत्रम् ॥

अथ परिशिष्टपर्व प्रारिप्सुनाऽनेनैव कलिकालसर्वज्ञेन श्रीहेम-चन्द्राचार्येण परिप्सितपरिसमाप्तिकामेन विघ्नविघाताय कृतं चतुःश्लोका-त्मकं श्रीवीरजिनस्तुतिरूपं मङ्गलमपीह प्रसङ्गाद्व्याख्यायते। तत्राऽयमाद्यः श्लोकः —

श्रीमते वीरनाथाय सनाथायाऽद्भुतश्रिया।
महानन्दसरोराजमरालायाऽर्हते नमः ॥ १ ॥

श्रीमत इति। अर्हते=अर्हति पूजां सुरादिकृतामित्यर्हन्, तस्मै तीर्थङ्कराय सुरासुरादिपूजिताय, यतश्चाऽर्हन्नत एव, अद्भुतश्रिया=अद्भुत-याऽसाधारणयाऽलौकिक्या च। असाधारणमलौकिकमेव चाऽद्भुतं भव-

श्रीमुखवक्तृत्वेन स्तुत्वा ज्ञानिमुख्यत्वेन स्तुवन्नाह—

**सर्वेषां वेधसामाद्यमादिमं परमेष्ठिनाम् ।**
**देवाऽधिदेव सर्वज्ञं श्रीवीर प्रणिदध्महे ॥ २ ॥**

सर्वेषामिति । **सर्वेषाम्**=सकलानाम्, न तु कतिपयानामेवेति बोध्यम् । **वेधसाम्**=ज्ञानिनाम्, **आद्यम्**=आदौ भवन्तम्, आदौ गणनीयं कीर्तनीयं चेत्यर्थः । मुखमिवाऽङ्गेषु प्रधानत्वान्मुख्यमिति वाऽर्थः । मुख्यो ह्यादौ प्रथममेव कीर्त्यते गण्यते चेति बोध्यम् । यद्वा— **सर्वेषाम्, वेधसाम्**=बहुवचनादुपलक्षणत्वाद्वेवा ब्रह्मेन्द्र०, शेषाश्चेन्द्रास्तेषां पूज्यत्वादादौ भवमिव । अथवा, वेधसः=प्रजापतयस्तेषामाद्यं प्रथमम्, ऋषभप्रभु ह्यादि पृथिवीनाथ, अर्हतां च सर्वेषामभेदः, यदुक्तम्—" यत्र तत्र समये यथा तथा योऽसि सोऽस्यभिधया यथा तथा । वीतदोषकलुष स चेद्भवानेक एव भगवन्नमोऽस्तु ते " इति । तथा—वेधसो विष्णवस्त्रिपृष्ठादयो वासुदेवा अर्धचक्रिणस्तेषामाद्यं प्रथमम् । भरतपुत्रो मरीचिर्हि प्रथमस्त्रिपृष्ठाख्यो विष्णु, मरीचिजीव एव च चरमोऽर्हन्निति श्रुतत्वा । अतः श्रीवीरजिन एव वेधसामाद्य । "स्रष्टा प्रजापतिर्वेधा" इत्यमर । " विष्णुर्जिष्णुजनार्दनौ ..... बभ्रुशशबिन्दुवेधस " इति हैमः । न केवलमसौ संसारिणामेवाऽऽद्योऽपि त्वससारिणामपीत्याह—**परमेष्ठिनाम्**=परमे लोकोत्तरत्वात्सर्वोत्तमे भावे=पर्याये तिष्ठन्तीति परमेष्ठिन. पञ्चाऽर्हत्सिद्धाचार्योपाध्यायसाधवस्तेषाम्, **आदिमम्**=आदौ भवम्, अतिशयाद्यसाधारणगुणविशिष्टतया निर्हेतुकपरमकारुणिकतया सर्वजगदुपकारकतया च

निमित्तमिति बोध्यम् । तस्या गङ्गायास्तत्प्रभवत्वात्तत्सम्बन्धी यो हिमाचलो हिमालयाख्यो नगाधिराजस्तद्रूपम् । यथा हि हिमवतो गङ्गा प्रभवति तथा वीरगच्छुतानि, तथा यथा हिमाचलो नगाधिराजस्तथा वीरो ज्ञातीन्द्र इति रूपकेण ध्वन्यते । अत्राऽपि परम्परितरूपकम् । अत एव, **विश्वाम्भोजरविम्**=विश्व जगदेव विकास्यत्वसाधर्म्या-दम्भोज कमल तस्य तद्विकासकत्वात्तत्सम्बन्धी रविः सूर्यस्तद्रूप , तम् । यथा रविणाऽम्भोज तथाऽनेन विश्व प्रबोध्यत इति परम्परितरूपकम् । अत एव, **देवम्**=देवाधिदेवम्, विनाऽपि प्रत्यय पूर्वोत्तरपदयोर्लोप इति ध्येयम् । **श्रीज्ञातनन्दनम्**=श्रीसमन्वितश्चाऽसौ ज्ञातस्य तथा-ख्यातस्य ज्ञातकुलस्येक्ष्वाकुविशेषस्य नन्दन आनन्दप्रदस्तम्, तत्रोत्पन्न-त्वात्तदुत्कर्षकत्वाच्चेति भाव । चरमजिनेश्वरं श्रीवीरमित्यर्थ । **वन्दे**= नमामि, यथा कल्याणश्रुतबोधलाभः स्यात्, तस्यैव तन्निदानभावादिति हृदयम् ॥ ३ ॥

सम्प्रत्यन्त शुद्धयर्थं वचनद्वारा चरमजिन स्तौति—

**पान्तु वः श्रीमहावीरस्वामिनो देशनागिरः ।**
**भव्यानामान्तरमलप्रक्षालनजलोपमाः ॥ ४ ॥**

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचित श्रीवीरजिनस्तोत्रं समाप्तम् ॥

पान्त्विति । **भव्यानाम्**=अनादिपारिणामिकभव्यत्वभाववताम्, अभव्यभिन्नानामित्यर्थ । सेत्स्यता सम्यक्त्ववतामिति परमार्थ । **आन्तर-मलप्रक्षालनजलोपमाः**=आन्तरमन्तर्भवमात्मसम्पृक्तमित्यर्थ । तादृशं यन्मलं विकार कर्म वा कषायादिर्वा, पक्षे शरीरसश्लिष्टरज.प्रभृतिकं

च । तस्य मलस्य परिशोधने, दूरीकरणे इति यावत् । मले सलिल-मुपमेयमाने यासां ता तथाभूताः, आत्मसम्बन्धिकर्मकषायादिमल-शोधने सलिलसदृशीत्य इत्यर्थः । यथा सलिलेन शरीरादिसम्बन्धिमलस्य शोधनं तथा जिनेश्वरदेशनावचनेनाऽऽन्तरमलस्येति भावः । सलिलेन हि मलशोधनं प्रसिद्धमिति हृदयम् । यद्यप्यान्तरमलेति विशेषणस्य मल सापेक्षत्वादसामर्थ्यम्, तथापि देवदत्तस्य गुरुकुलमित्यादिवद्गमकत्वा-त्समासो बोध्यः । श्रीमहावीरस्वामिनः=श्रीसन्मतिनो महावीरस्य शासनस्य चरमतीर्थंकर धर्मोपदेशादिना सन्मार्गप्रदर्शनादिना कृत्वा पाल-कत्वात्स्वामीव तस्य श्रीमहावीरप्रभोः, देशनागिरः=धर्मोपदेशवचांसि, वः=युष्मान् भव्यान् पान्तु=भवाद्रक्षन्तु । तदाराधनेन आन्तर मलप्रक्षालनात्तच्च सर्वोऽपायपरिहार इति ता देशनागिरः पान्ति-त्यर्थः । तद्वचनमेव शरणं रागाग्निपराभूतानामिति तात्पर्यम् । अत्र शरीरादिमलक्षालनवदान्तरमलं चाऽऽत्मनीति द्वयोर्भेदेऽप्यभेदाऽध्यवसाया-दतिशयोक्त्यनुप्राणितोपमा ॥ ४ ॥

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचिते वीरजिनस्तोत्रे श्रीतपोगच्छाधिपतिशासनसम्राट्कदम्बगिरिप्रमुखानेकतीर्थोद्धारकाचार्यवर्य-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारसमयज्ञशान्तमूर्त्याचार्यवर्यश्रीविजयविज्ञान-सूरीश्वरपट्टधरसिद्धान्तमहोदधिप्राकृतविद्विशारदाचार्यवर्यश्रीविजयकस्तूर-सूरीश्वरशिष्यपंन्यासश्रीकीर्तिचन्द्रविजयगणिविरचिता कीर्तिकलाख्या व्याख्या समाप्ता ॥

— ० —

## ॥ प्रशस्तिः ॥

वृद्धगुरु र्नेमि स्तीर्थोद्धाराऽऽसयशोनिचयः ।
शासनसम्राड् जातो भविकुलकैरवकलानाथः ॥ १ ॥
तत्पट्टालङ्कारो बहुविधबिरुदावलीपात्रम् ।
विज्ञानः प्रगुरु र्मे समयज्ञः शान्तमूर्त्तिश्च ॥ २ ॥
सुगुरु र्मे कस्तूरः प्राकृतविद्विशारदः सूरीशः ।
नव्यभव्याऽब्जबन्धुः सिद्धान्तमहोदधिर्गीतः ॥ ३ ॥
तत्कृपोपेतसुमतिः कीर्तिकला कीर्तिचन्द्रोऽहम् ।
सकलाऽर्हत्स्तोत्रस्य व्याख्या ख्याख्या समाख्यमिमाम् ॥ ४ ॥
केऽपि द्रक्ष्यन्तीमामुपेक्षयाऽहङ्कृतिच्छलिताः ।
कष्ट मनसि वहेयु र्हा ! मात्सर्यं दुरन्ततमम् ॥ ५ ॥
वराकोऽसूयाऽसौ द्विगुणितनीलाऽऽननो न वचनीय ।
सद्भक्तं सद्यो मुङ्क्ते दैवहतस्याऽपहत्याऽलम् ॥ ६ ॥
सोपमेष्यन्त्यवश्य गुणगृह्या प्रेक्ष्य तामेताम् ।
व्याख्यासु सतीषु कतिषु सुमेषु कह्लारमिव भृङ्गाः ॥ ७ ॥
रसशीतांशुखनयने वैक्रमवर्षे समाप्तिमासेयम् ।
सौम्यमेकादश्या सकलाऽर्हद्वचोऽर्हणा भूयात् ॥ ८ ॥
नेतः कीर्तिमपेक्षे पाठकजनमनःप्रसाद तु ।
तदर्हतो भक्तानपि सद्भक्त्येह प्रपन्नोऽस्मि ॥ ९ ॥

इति कीर्तिकलाव्याख्यासहित श्रीसकलाऽर्हत्स्तोत्रं श्रीवीरजिनस्तोत्रं च समाप्तम् ॥

॥ अर्हम् ॥

श्रीविजय-नेमि-विज्ञान-कस्तूर-सूरिसद्गुरुभ्यो नमः ।

# कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितं

# श्रीमहादेवस्तोत्रम्

## पन्यासश्रीकीर्तिचन्द्रविजयगणिविरचित-

## कीर्तिकलाव्याख्याविभूषितम् ।

वीतराग महादेव करुणावरुणालयम् ।
सिद्धयेकसाधनं सद्बीप्रदं केवलिनं श्रये ॥ १ ॥

तपोगच्छनिरभ्राऽभ्रभानुं शासनचक्रिणम् ।
तीर्थोद्धाराऽऽप्तसत्कीर्तिं सूरिं नेमिं नमाम्यहम् ॥ २ ॥

समयज्ञं विज्ञानं सूरिं शान्तमूर्तिं प्रगुरुम् ।
शिष्यप्रशिष्यसेवितचरणद्वन्द्वं नमामि जनतेड्यम् ॥ ३ ॥

सूरीशः प्राकृतविद्विशारदः शारदेन्दुसितकीर्तिः ।
कस्तूरः शरणं मे सिद्धान्तमहोदधिः सुगुरुः ॥ ४ ॥

पन्यासः कीर्तिचन्द्रोऽहं व्याख्यां कीर्तिकलाऽभिधाम् ।
करोमि श्रीमहादेवस्तोत्रस्याऽर्थविदे मुदा ॥ ५ ॥

मङ्गल्यमिति भावः । एतेन दर्शनस्य मङ्गलात्मत्वं सूचितम् । स्वयम्-मङ्गलस्य मङ्गलहेतुत्वाऽयोगादिति बोध्यम् । अत एव, **प्रशस्तम्**=वर्णनीयमदुष्टमिष्टं च, न तु दिगम्बरादिमावाज्जुगुप्सादिकरत्वादप्रशस्तमिति भावः । एतेन दर्शनस्याऽवश्यकरणीयत्वं सूच्यते । यद्धि अप्रशस्तं दर्शनं न तत्कस्याऽपि करणीयमिति बोध्यम् । चद्वयं सर्वविशेषणसमुच्चये, तेन चैकैकमात्रस्याऽपर्याप्तत्वं सूच्यते, एतेषां गुणानां समुदितानामेव शिवत्वप्रयोजकत्वमित्याशयाऽवगमादिति ध्येयम् । अथ च, **यस्य**=यदीयम्, यदुपज्ञमित्यर्थः । **दर्शनम्**=पदार्थयाथात्म्यज्ञानाऽभ्युदयनिःश्रेयससिद्ध्युपायभूतमार्ग, स्याद्वादरूपः सिद्धान्त इति गूढाकूतम् । **प्रशान्तम्**=उपशमप्रतिपादकत्वात्कार्ये कारणोपचाराच्छान्तिप्रदमित्यर्थः । न तु दर्शनान्तरवद् हिंसासाध्यविध्याद्युपदेशकत्वादप्रशान्तमिति भावः । तथा, **सर्वभूताऽभयप्रदम्**=सर्वभूताऽभयं प्रददाति दयाऽहिंसादीनां विधेयतया प्रतिपादनेन कृत्वा प्रयोजयतीति तथाविधम्, सर्वभूताभयोपदेशकमित्यर्थः । न तु देवान्तरोपज्ञदर्शनान्तरवदभिचारादिप्रतिपादनेन कृत्वा भयप्रदमिति भावः । अत एव, **मङ्गल्यम्**=सम्यग्ज्ञानादिमङ्गलप्रयोजकत्वान्मङ्गलप्रयोजकम्, "नन्दी मङ्गलमि"त्युक्तेरिति बोध्यम् । अत एव चैतद्दर्शनमपि मङ्गलमिति सूच्यते । तत एव च, **प्रशस्तम्**=दर्शनश्रेष्ठम्, वस्तुयाथात्म्यप्रतिपादकत्वात्सन्मार्गप्रदर्शकत्वाच्चेति भावः । यदुक्तम् "प्रधानं सर्वधर्माणां जैनं जयति शासनमि"ति । एतेनाऽस्याऽवश्योपादेयत्वं ध्वन्यते । अप्रशस्तप्रशस्तत्वयोर्हेयोपादेयत्वप्रयोजकत्वादिति बोध्यम् । **तेन**=उक्तगुणमहिम्ना, स इति यच्छब्दबलाल्लभ्यते । **शिवः**=शिवं कल्याणमस्त्यस्येति स तादृशः,

महत्त्वेश्वरत्वोमययोगादिति हृदयम् । **महेश्वरताम्**=महाश्चाऽसावी-श्वरश्च, तस्य भावस्तत्ता देवाधिदेवत्वमित्यर्थः । **गतः**=प्राप्तः, न तु नाममात्रेण भक्तैः श्रद्धादिना महत्त्वाद्यभावेऽपि तथाख्यात इति भावः । उक्तगुणसम्पत्तौ हेतुगर्भं विशेषणमाह—**रागद्वेषविनिर्मुक्तम्**=रागो विषयासक्तिः द्वेषोऽभिष्टेऽप्रीतिरुपलक्षणत्वात्कषायाश्च, तैर्विनिर्मुक्तम-सम्पृक्तम् । तथाविधज्ञानचारित्रादिना रागादिमूलकर्मणः साकल्येन क्षयात्कारणाऽभावात्कार्यस्य सुतरामभावाद्वीतरागमित्यर्थः । वीतराग एव महानीश्वरश्चेति स एव महेश्वरः । अनीदृशस्तु रागादिपरतन्त्रतया न महानपीश्वर इति भावः । अत एव, **तम्**=तादृशं महत्त्वादीश्वरत्वाच्च महेश्वरतां गतं वीतरागम्, **महेश्वरम्**=महेश्वरेत्यन्वर्थसंज्ञासंज्ञिनम्, देवाऽधिदेवमित्यर्थः । **अहम्**=भक्तिश्रद्धासमन्वितो विवेकी स्तोता, **वन्दे**=नमामि । स्वात्मोत्कर्षार्थमित्यात्मनेपदेन सूच्यते । यस्त्वनीदृशो दारपरिग्रहाऽसुरहननादिना रागद्वेषपरतन्त्रः, अत एवाऽमहाननीश्वरश्च, स न वन्दनीयो विवेकिभिरिति हृदयम् ॥ २ ॥

ज्ञानादिविशेषवैशिष्ट्यादेव देवस्य महत्त्वमित्याह—

**महाज्ञानं भवेद्यस्य लोकालोकप्रकाशकम् ।**
**महादया-दम-ध्यानं महादेवः स उच्यते ॥ ३ ॥**

महाज्ञानमिति । **यस्य**=यादृशस्य देवस्य, **लोकालोक-प्रकाशकम्**=लोकस्य लोकवर्तित्रैकालिकसर्वद्रव्यपर्यायात्मकपदार्थसार्थस्य, तात्स्थ्यात्ताच्छब्द्यमिति बोध्यम् । अलोकस्य च प्रकाशकं परिच्छे-दकम्, अत एव, **महाज्ञानम्**=महत्सर्वपदार्थविषयत्वादनन्तत्वाच्छुद्ध-

त्वाच्च सर्वमिदं मध्यानं तत्, केवलध्यानमित्यर्थः । ध्यानान्तरं तु कर्ति-
श्रुतादिकमस्यविषयमिति च सम्भवदिति बोध्यम् । भवेत्=स्यात् ।
च सर्वस्वार्थसार्थपरिच्छेदककेवलध्यानवानिति सारार्थः । तथा, महा-
दयादमध्यानम्=महच्च तत् सर्वजीवविषयत्वाविच्छेदरूपत्वाच्च सर्वोत्कृष्ट
दया, सा च सर्वेन्द्रियविषयत्वाद्विवेकसम्भूतत्वाच्चोऽनर्थोऽभावरूप
दमः स च शुभात्मकत्वान्निर्विकल्पत्वाच्च सर्वोत्तमं महाध्यानं समाधि
तेषां समाहारो दयादमध्यानम्, यस्येति भवेदिति च सम्बध्यते ।
दया=परदुःखप्रहाणेच्छा, दम इन्द्रियनिग्रहः, ध्यानं च शुक्लध्यानमिति
ध्येयम् । यदुक्तम् "सर्वास्वपि दयाऽस्तु ते"ति, "सकलानि च
चाक्षाणि नैवोच्छृङ्खलितानि च । इति सम्यगमतिक्रमा समेन्द्रियदम
स्त" इति 'ध्याता ध्येयं तथा ध्यानं त्रयमेकात्मतां गतमि'ति च ।
सः=असौ महाध्यानदयादमध्यानवान् देव एव । सर्वं वाक्यं साव-
धारणमिति न्यायादेवकारोऽर्थो लभ्यते । तेन चाऽन्यस्मात् दयादमध्यान-
व्यवच्छेदः । महादेव=महादेवपदप्रतिपाद्य, उच्यते=कथ्यते ।
महादेवपदेन स एव गीयते इत्यर्थः । न तु तीर्थान्तरप्रसिद्धो महा-
देवोऽन्यथा मुक्तिमार्गोपदेशाभिर्बोधोऽनुरागादित्यनन्तसमरहितो दार-
परिग्रहादेर्दुर्ध्यानो देवियमपि कोपादिमत्त्वादिति भावः ॥ ३ ॥

अथेन्द्रियजयद्वारा देवस्य पुनर्महत्त्वमाह—

महास्तस्करा ये तु तिष्ठन्तः स्वशरीरके ।
निर्जिता येन देवेन महादेवः स उच्यते ॥ ४ ॥

महान्त इति । स्वशरीरके=स्व निज यच्छरीरम्, स्वार्थे कः । तस्मिन्, निजदेहे, तिष्ठन्तः=वर्तमाना, ये=यत्प्रकारा, तुरेवाऽर्थे भिन्नक्रम स इत्यनेन सम्बध्यते । महान्तः=धनधान्याद्यपहारक-तस्कराऽपेक्षया बलवन्तो दुर्निग्राह्या आत्मसम्पदा सम्यग्दर्शनादीनां पश्यतोहरा:, तस्कराः=चौरा, इन्द्रियाणि मनोवच काययोगरूप आस्रवो वा । तानि हि बलाद्विषयेषु प्रवर्त्तयन्ति सद्दर्शनादीनि मुष्ण-न्तीति बोध्यम् । "चौरस्तु प्रतिरोधकः । दस्यु पाटच्चर स्तेनस्तस्करः पारिपन्थिक" इति हैम । अन्ये हि तस्करा परोक्ष एव बाह्य धनमेव च मुष्णन्ति, इन्द्रियाण्यास्रवाश्च शरीरे कृतस्थितय एव बला-दात्मसर्वस्वं दर्शनादिकमपहरन्तीति तानि महान्तस्तस्करा इति हृदयम् । ते इति यच्छब्दबलाल्लभ्यते । येन=यत्प्रकारेणाऽनन्तज्ञानादिमता सवरसंवृतेन, देवेन=देवपदवाच्येन, निर्जिताः=वशीकृता निगृहीता वा । यो देवो जितेन्द्रिय सवरसंवृतश्चेति निष्कृष्टोऽर्थ, न तु दार-परिग्रहादिनिरत शत्रुवधादिकदारम्भवाश्चेति हृदयम् । यदुक्तम्—"सयतानि न चाऽक्षाणि नैवोच्छृङ्खलितानि च । इति सम्यक्प्रतिपदा त्वयेन्द्रियजय कृत" इति, "मनोवच कायचेष्टा कष्टा सहृत्य सर्वथा । श्लथत्वेनैव भवता मन शल्य वियोजितमि"ति च । स तु=स एव, महादेव उच्यते । बाह्यतस्करजयवदान्तरतस्करजयो येन विहित स महादेव । बाह्यतस्करजये तु देवमात्रम् । अन्येषामपि तादृशत्वान्महत्त्वे बीजाऽभावात् । ततश्चाऽन्यादृशोऽजितेन्द्रियो हिंसा-द्यारम्भवाश्च देव परतीर्थिकप्रसिद्धो महादेव सामान्यदेवसदृश एवेति न केवलं महत्त्वमपि तु देवत्वमपि तस्याऽतिविद्वित्याकूतम् ॥ ४ ॥

सम्प्रति वीतरागत्वेन महादेवत्वमाह—

रागद्वेषौ महामल्लौ दुर्जयौ येन निर्जितौ ।
महादेवं तु तं मन्ये शेषा वै नामधारकाः ॥ ५ ॥

रागद्वेषाविति । येन=भगवता देवेन, महामल्लौ=महान्तौ पराऽपेक्षया देहबलविशिष्टत्वात्सर्वाधिकौ यौ मल्लौ लोके सर्वैः स्मर्येते व्यायामादिना शारीरिकविशिष्टशक्तिसम्पन्नौ बाहुयुद्धे, तादृशावपि, मनआदिकस्य सम्बन्धेनाऽतिबलत्वादिति बोध्यम् । अत एव दुर्जयौ=दुःखेन जीयेते इति तादृशौ कष्टसाध्यनिग्रहौ महामल्लो हि न सुकरतया जेतव्यः कदाऽपि, महत्त्वस्याऽन्यथाऽनिर्वाहात् । तत्र च महामल्लोऽन्योऽस्तु मा वा दुर्जयस्तु भवत्येवेति भावः । रागद्वेषौ= रागो विषयेष्वासक्तिः द्वेषोऽनिष्टेऽप्रीतिः तादृशौ तौ, महान्तावपि हि सर्वे रागद्वेषयोरधीनास्सर्वेषामात्मस्वरूपमेवेति ध्येयम् । निर्जितौ= निगृहीतौ त्यक्ताविमौ, विनाशिताविति यावत् । रागादीनां निग्रहस्त्यागस्य नामान्तरमेवेति बोध्यम् । तुरेवाऽर्थे भिन्नक्रम मित्यनन्तर प्रयुक्तम् । तथा च, तं तु=तमेव, तादृशं महामल्लरागद्वेष जेतारं देवमेवेत्यर्थः । महादेवम्=महादेवपदाऽभिधेयम्, मन्ये= स्वीकरोमि । महामल्लजयमहादेवस्य सद्वेतुकत्वमित्यतस्तदेव स्वीकारार्थ मिति हृदयम् । ननु तत्पदीयेषु बहवो महादेवा प्रसिद्धा, न च ते सर्वे जितरागद्वेषाः परिग्रहादिना रागादिसद्भावाऽवगमात्, तत्कथमेते महादेवत्व तेषां कथमिति चेत्ताह—शेषाः=रागादिमन्तस्त्वन्ये महादेवपदसम्बोध्याः वै=निश्चयतः, नामधारकाः=महादेवेति नामैव

धारयन्ति, न तु तत्र महादेवपदार्थोऽपि घटते । एवञ्च ते रूढ्यैव महादेवा न तु योगत इति वस्तुतस्ते न महादेवाः । नामनिक्षेपविषयताया यादृच्छिकत्वात्तादृशमहादेवाभिधाऽसिद्धेः । अर्थक्रियाकारित्वाद्भावतो महादेव एव महादेवः । किञ्चाऽन्यैर्दुर्जेयं यो जयति स एवेतराऽपेक्षयोत्कृष्टगुणवैशिष्ट्यान्महत्त्वास्पदम् । यदुक्तम्—"अरक्तो भुक्तवान्मुक्तिमद्विष्टो हतवान् द्विषः । अहो महात्मना कोऽपि महिमा लोकदुर्लभः" इति । रागादिपरतन्त्राणां देवानां रागादिजेता महानिति वीतराग एव भावतो महादेवो नाऽन्ये । यद्वक्ष्यत्यनुपदमेव—"शब्दतो गुणतश्चैवाऽर्थतोऽपि जिनशासने" इति भावः ॥ ५ ॥

ननु नामभावमहादेवयोः कतरस्तवेष्ट इति चेत्तत्राऽऽह—

**शब्दमात्रो महादेवो लौकिकानां मते मतः ।**
**शब्दतो गुणतश्चैवाऽर्थतोऽपि जिनशासने ॥ ६ ॥**

शब्दमात्र इति । **लौकिकानाम्**=लोका एव लौकिकास्तेषाम्, साधारणजनानां वस्तुतत्त्वग्रहणाऽपटूनामित्यर्थः । लौकिकमर्थं बहु मन्यमानानामिति यावत् । **मते**=सिद्धान्ते, शासने इत्यर्थः । स्वर्गादिमात्रसाधनहिंसाविसाध्ययज्ञादिप्रतिपादके शास्त्रे इति हृदयम् । **मतः**=इष्टः प्रतिपादितश्च, **महादेवः**=महादेवाऽभिधो देवः, **शब्दमात्रः**=शब्द एव, शब्दत एवेत्यर्थः । न तु तत्र महादेवपदार्थो महादेवगुणो वा, रागादिसत्त्वान्महत्त्वाऽभावात् । यदुक्तम्—"स्पृहावन्तो विलोक्यन्ते लघवस्तृणतूलवत् । महाश्चर्यं तथाप्येते मज्जन्ति भववारिधौ"इति "तूलं तृणादपि लघु तूलादपि हि याचकः । वायुना किं न नीतो-

शक्तितः=निजात्मवीर्यविशेषतः, वीतरागस्य क्षायिकाऽनन्तवीर्यवत्त्वादिति भावः। **व्यक्तितः**=सहजातिशयविशिष्टतया स्वीयेतरविलक्षणाऽसाधारणाऽलौकिकव्यक्तित्वमपेक्ष्य, चैवेति समुच्चये। **विज्ञानात्**=विशिष्टं सर्वद्रव्यपर्यायविषयत्वादनन्तत्वाद्विशुद्धत्वाच्चेतराऽपेक्षयोत्कृष्टं यज्ज्ञानं तस्मात्, केवलज्ञानाद्धेतोरित्यर्थः। **तथा**=पुनः, **लक्षणात्**=सुरासुरनमस्यत्वादिरागद्वेषजयादिरूपमहादेवलक्षणस्योक्तस्य वक्ष्यमाणस्य च सद्भावाद्धेतोश्च, **सः**=तादृशो मोहजालहन्ता देवः, **महादेव उच्यते**। यो वीतमोहोऽनन्तवीर्यः सातिशयव्यक्तिर्विज्ञानवान्, अत एव महादेवलक्षणोपेतश्च स महादेव उच्यते, इतरस्तु शब्दमात्र इति सारार्थः। यद्वा येन विज्ञानात्स्वीयविशिष्टज्ञानबलाच्छक्तितो निजात्मवीर्यविशेषबलाच्च मोहजालं व्यक्तितो व्यक्तया, प्रत्येकं व्यक्तिं यथास्यात्तथा, अयं मोहोऽयं मोह इत्येवं प्रतिव्यक्ति शृङ्गग्राहिकया गृहीत्वेत्यर्थः। मोहसमूहसम्बन्धिन्यः सर्वा एव व्यक्तय इति यावत्। हतम्, स लक्षणात्सकलमोहहन्तृत्वरूपाऽसाधारणधर्मात्मकलक्षणहेतोर्महादेव उच्यत इत्यर्थः। न तु तीर्थान्तरीयदेववद्भार्यावियोगादिना क्षणे विरक्तः, स्वभार्यायां पार्वत्यां दक्षयज्ञे मृतायां महादेवो विरक्तस्तपस्तेपे, पुनश्च दारपरिग्रहः कृत इति पौराणिका इत्यनुसन्धेयम्॥ ७॥

इदानीं मदलोभजयाख्यगुणेन स्तुवन्नाह—

**नमोऽस्तु ते महादेव ! महामदविवर्जित !**
**महालोभविनिर्मुक्त ! महागुणसमन्वित ! ॥ ८ ॥**

महादेव एव स्यादिति हृदयम्। ते=तुभ्यमेव तादृशाऽनुत्तमविशेषण-विशिष्टाय, न त्वनीदृशाय, सर्वं वाक्यं सावधारणमिति न्यायादिति बोध्यम्। **नमः**=नमस्कारोऽस्तु, ममेतिशेषः। महाविराहित्याय गुणलाभाय च तादृशो महादेव एव नमस्करणीय उत्कृष्टत्वात्तान्यादृशो-ऽपकृष्टत्वादात्महितेच्छुभिरिति तीर्थान्तरप्रसिद्धो महादेवो न केवलं शब्दमात्रोऽपि तु नमस्कारमपि नार्हतीत्याकूतम्॥ ८॥

सम्प्रति पुना रागाद्यभावान्महादेवत्वमाह—

**महारागो महाद्वेषो महामोहस्तथैव च।**
**कषायश्च हतो येन महादेवः स उच्यते॥ ९॥**

महाराग इति। येन=यत्प्रकारेण देवेन भुवनाऽद्भुताऽतिशय-शालिना, **महारागः**=महान् गुरुतरो दुष्परिहरत्वादृढतरश्चिरसह-चरत्वादङ्गीकृतजीवमात्रत्वाच्च दुर्जयश्च यो रागो विषयाऽनुरागो विषया-ऽऽसक्तिर्विषयेषु प्रीतिर्वा स तादृशः, "रागोऽनुरागोऽनुरति"रिति हैमः। **महाद्वेषः**=महान् गुरुतरो दृढतरो दुर्जयश्च यो द्वेषोऽनिष्टेष्व-प्रीतिः स तादृशः, **तथैव चे**ति समुदाय समुच्चये। **महामोहः**= महान् गुरुतरो दृढतरो दुर्जयश्च यो मोहोऽस्वे स्वबुद्धिः, स तादृशः, **कषायः**=क्रोधमानमायालोभात्मकाऽऽत्माऽशुभपरिणामः, **चः** समुच्चये। **हतः**=विनाशितः, त्यक्त इत्यर्थः। रागादीनां हि त्याग एव नाश इति बोध्यम्। न तु देवान्तरवद्विग्रहानुग्रहपरिमहादिनाऽनुमितरागादि-मानित्याकूतम्। परे देवा रागादीनपि हन्तुमप्रभवोऽयं तु महारागा-दीनपि हन्तीत्यत एव, **सः**=तादृग्महारागादिहननसाधनाऽसाधारणा-ऽलौकिकाऽऽत्मवीर्यसम्पन्नः, **महादेव उच्यते**। देवाऽन्तराऽसाध्य-

दिशतीत्येवंशील, तादृशश्चतस्योपदेशोऽस्त्यस्य विधेयतया प्रतिपाद्यतया च वा सः, च समुच्चये। न तु बालतपोहिंसादिसाध्ययज्ञादिरूपनिकृष्टव्रतोपदेशीति भाव। स महादेव उच्यते। यस्त्वल्पकामहन्ता दारपरिग्रहादिना कामाधीनो वा भवमग्नतया भवभीतोऽल्पव्रतोपदेशी च शासनान्तरे प्रसिद्धस्तस्य तु देवत्वमप्यतिवहु, तस्मात्स महादेवः शब्दमात्र एवेति तात्पर्यम् ॥ १० ॥

अथ क्रोधादिजेतृत्वेन महादेवत्वमाह—

**महाक्रोधो महामानो महामाया महामदः ।**
**महालोभो हतो येन महादेवः स उच्यते ॥ ११ ॥**

महाक्रोध इति। **येन**=यत्प्रकारेण देवेन, **महाक्रोधः**=महान्नत्युत्कटो हिंसादिमहुविप्रयोजकतयाऽतिचिरस्थायितयाऽनल्पश्च य क्रोधो विविधाऽनिष्टप्रयोजकतया स्वसजातीयेषु गुरुतरः कोप, तथा, **महामानः**=महान् गुर्वादिष्वप्यवज्ञाप्रयोजकत्वादतिमात्रो यो मानो मम जात्यादिक सर्वाऽधिक नाऽन्य कोऽपि मादृश इत्येव जातिकुलैश्वर्यविद्याद्यभिमान, स। "गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नतिरि"त्यमर। तथा, **महामाया**=महती परैर्दुर्ज्ञेयत्वाद्दुष्पारा या माया शाठ्य मिथ्याव्यापारेण परवञ्चनादिरूप सा। "माया तु शठता शाठ्यमि"ति हैम। **महामदः**=महान् अविनयादिप्रयोजकत्वाद्गुरुतरो यो मदो बलैश्वर्याद्याधिक्यभावनाजनितचित्तोद्रेक, स। अत्यधिकमौद्धत्यमित्यर्थ। "चित्तोद्रेक स्मयो मद" इत्यमरः। तथा **महालोभः**=महान् स्वल्पेऽपि वस्तुनि महाजनादियाच्ञादिप्रयोजकत्वादतिलघुत्व-

त्कमपि महत्त्व गम्यते । -महानन्दादिसमर्थनक्षमं गुणान्तरमप्याह— **महाज्ञानी**=महदनन्तत्वात्सर्वविषयत्वात्सर्वाधिक क्षायिकत्वात्सर्वविशुद्ध, च यज्ज्ञान केवलज्ञान तदस्त्यस्येति स तादृश, सर्वज्ञ इत्यर्थ । यो महाज्ञानी तस्यैव महानन्ददये इति भाव । अनरवन्ति चकाणीतिवत्कर्मधारयान्मत्वर्थीयो बोध्य । हेतुद्वारकेण विशेषणेन ज्ञान समर्थयन्नाह— **महातपाः**=मह परैरसाध्यत्वान्निरन्तरत्वान्निर्दुष्टत्वान्महाफलत्वाच्च सर्वोत्कृष्ट सर्वविशुद्धं सर्वाधिक च तपोऽनशनादिरूप यस्य स तादृश, ज्ञानतपसो फलमाह— **महायोगी**=महान् सर्वोऽतिशयमूलतयाऽलौकिकतयाऽसाधारणतया सर्वकर्मक्षयप्रयोजकतया चाऽनुपम, सर्वोत्कृष्टो निरन्तर प्रवृत्तोऽसाधारणो योगश्चारित्र समाधिर्वा यस्य स, योगीन्द्र इत्यर्थ । यदुक्तम्—"स एष योगसाम्राज्यमहिमा विश्वविश्रुत । कर्मक्षयोत्थो भगवन् । कस्य नाऽऽश्चर्यकारणम् ?" इति । ज्ञानतपसोर्महायोगलाभ. फलमिति कृतार्थत्वं ध्वन्यते । **महामौनी**=महत् सर्वविलक्षणत्वात्सर्वोत्तमत्वादभङ्गुरत्वाच्चाऽसाधारणत्वाच्च सर्वश्रेष्ठं यन्मौन वाचयमता, तदस्त्यस्येति [illegible] । मियपथ्यतथ्यमितवाक्यं हि पारमार्थिक मौनम्, वाङ्निरोधश्च शब्दार्थमात्रम्, वाङ्निरोधात्मकमौनस्य हि सदुपदेशादिविरोधितया लोकहिताननुगुणत्वादिति ध्येयम् । किञ्च महत्सर्वाऽतिशायि यन्मौन मुनित्व मुनेर्भावः कर्म च, तदस्त्यस्येति स., महाज्ञानचारित्रसम्पन्न सम्यक्त्वसम्पन्नश्चेत्यर्थ.। यदुक्तम्—"सम्यक्त्वमेव तन्मौन मौन सम्यक्त्वमेव वे"ति बोध्यम् । **स महादेव उच्यते ।** लौकिकाऽनन्दमज्ञो निर्दयोऽल्पज्ञोऽल्पतपा बाल्ययोगी मायामौनव्रती

क्रोधहिंसाऽननुगुणमौनी च परस्मात्तो देव इति स शब्दमात्र इति मे
निसर्गत्वम् ॥ १२ ॥

सम्प्रति वीर्यादिमहत्त्वान्महादेवत्वमाह—

महावीर्यं महाधैर्यं महाशीलं महागुणः ।
महामञ्जुक्षमा यस्य महादेवः स उच्यते ॥ १३ ॥

महावीर्यमिति । यस्य = यादृशस्य देवस्य, महावीर्यम्= महदसाधारणत्वादलौकिकत्वादात्मिकत्वादनन्तत्वाच्चाऽनल्पं सर्वाधिकं सर्वोत्तमं च यद्वीर्यं सामर्थ्यम् अस्त्यास्ते, तत् । महाधैर्यम्=महदुपसर्गादिभिरप्यविचलितत्वादसमसाधारणत्वादलौकिकं सर्वाधिकं यद् धैर्यमस्त्यानल्पमनवरतऽनुद्वेगश्च तत् । महाशीलम्=महदसाधारणत्वादलौकिकत्वादनल्पत्वादसममत्वाच्च सर्वोत्तमं मञ्जुलं चारित्रं तत् । महागुणः = महान् महद्भिरपीन्द्रादिभिः स्तवनीयत्वादसाधारणत्वादलौकिकत्वात्सर्वोत्कृष्टत्वाच्च सर्वोत्कृष्टो यो गुणो ज्ञानादिः सम्यक्त्वादिभिर्व्याप्तिश्च स । महामञ्जुक्षमा=महती अनल्पा सत्यमन्यप्रकारिण्यपि साधारणत्वादलौकिकी च अत एव मञ्जु मनोरमा च या क्षमा तितिक्षा सा । 'तितिक्षा सहनं क्षमे'त्ति "मञ्जुमञ्जुलमनोरमाणि चे"ति च हैमः । सामर्थ्यात्समुच्चयो गम्यते । एवमेतानि यस्य, स महादेव उच्यते । न त्वन्यदेवस्तस्यैकरूपत्वादल्पवीर्योऽस्येमाऽपि क्रोध्यस्त्वत्पधैर्यो दारादिपरिग्रहादिना लक्षितशील गुणाऽगुणवशाऽऽहारादिमत्वादल्पगुणोऽल्पीऽप्यपराधे निर्दोषत्वादसहनः,

